


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 05
August-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

आगस्ट् - २०२३
रू. २०/-

## तिरुमल श्रीस्वामिनः पवित्रोत्सवाः

26-08-2023 तः 29-08-2023 पर्यन्तम्

SIVAPRASAD

## तिरुमलतिरुपतिदेवस्थानानि
# प्रदर्शमान






**सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे. पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका**

## सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

**भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः**

**सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायाः कृते शुल्कं दत्वा**



**श्रीनिवासस्य अक्षरप्रसादं प्रतिमासम् अनुभूयन्तु**



# सप्तगिरिः




## आध्यात्मिक सचित्र मास पत्रिका

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

### ..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०
वार्षिक ग्राहकत्वम् रू/- २४०
आजीविक ग्राहकत्वम् रू/- २४००
(१२ वर्ष पर्यन्तम् एव)

सङ्केतः
प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.
दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९



# गीतामृतम्

सञ्जय उवाच -

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह।।
तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ।।

(भगवद्गीता २-९-१०)

सञ्जयः उक्तवान् -

भावः - हे परन्तप भरतवंशीय! धृतराष्ट्र महाराज! अर्जुनः श्री कृष्णमुद्दिश्य अहं युद्धं न करिष्यामि इत्युक्त्वा मौनेन स्थितः। कृष्णः एवमुक्तवन्तम् उभयोः सेनयोः मध्ये स्थितं विषादं प्राप्तवन्तञ्च अर्जुनं परिहासं कुर्वन्निव वक्ष्यमाण रीत्या उक्तवान्।

# सङ्कीर्तनम्



मादृशानां भवामयदेहानाम्
ईदृशं ज्ञानमिति येपि न वदन्ति ।।मादृशा।।

वाचामगोचरं वाञ्छा सर्वत्र
नीचकृत्यैरेव निबिडीकृता
केचिदपि वा विष्णुकीर्तनं प्रीत्या
सूचयन्तो वा श्रोतुं न सन्ति ।।मादृशा।।

कुटिलदुर्बोधनं कूहकं सर्वत्र
विटविडम्बनमेव वेद्म्यधिकं
पटुविमलमार्गसम्भावनपरसुखं
घटयितुं कष्टकलिकाले न सन्ति ।।मादृशा।।

दुरितमिदमेव जन्तूनां सर्वत्र
विरसकृत्यैरेव विशदीकृतं
परमात्मानं भव्यवेङ्कटनाम
गिरिवरं भजयितुं को वा न सन्ति ।।मादृशा।।

(अन्नमाचार्यसङ्कीर्तनम्)

# सनातनधर्मे चरेम

वेदाः उपनिषदः पुराणानि, मन्त्र शास्त्राणि स्तोत्रादि वाङ्मय सर्वस्वं च सनातन धर्मस्य आलम्बनानि भवन्ति। तेषु विद्यमानानां शाश्वत मूल्यानां सर्वदा स्मरणेन जीवितं सफलं भवति। एतानि सर्वाण्यपि जीवितेषु अनुपयुक्तानि इति आलोच्य निष्कासनम् अकृत्वा एतानि अनुसृत्य एतानि सर्वाण्यपि अक्षर सत्यत्वेन स्वीकृत्य, आदृत्य चलामः चेत् जीवितं सुगमं, सुन्दरं च भवति।

सर्वेष्वपि कालेषु अनादिकालतः आरभ्य अस्माभिः आद्रियमाणो धर्मः सनातन धर्म एव। एकं सत् विप्रा बहुधा वदन्ति। इति ऋग्वेदोक्तरीत्या विभिन्नासु मानसिकभूमिकासु उपयुज्यमाने सनातनधर्मे अनेकाः प्रक्रियाः बहूनि साधनानि साधकानां सौकर्यार्थं दर्शितानि वर्तन्ते। विविधानां शक्तीनां प्रतीक भूताः देवताः, तासां पूजा विधानानि विविधव्रतानि तेषाम् आचरणपद्धतयः सनातनधर्मत्वेन स्वीक्रियन्ते।

नित्यजीविते निरन्तरधर्माचरणात् निर्मलस्य च सुखजीवनस्य च सिद्धिः भविष्यति धर्मः एव रक्षा कवचीभूय रक्षिष्यति धर्माः पुराणेतिहासेषु शास्त्रवाङ्मये च विद्यमानाः आर्षधर्माः नित्यजीविते आचरणीयत्वेन निर्दिष्टाः परमेश्वरः स्वीयसृष्टौ विद्यमानस्य चराचरप्रपञ्चस्य प्रवृत्तिं नियमबद्धां कृतवान्। एवं कृतवान् अपि परमेश्वरः मानवबुद्धेः परिपूर्णं स्वातन्त्र्यं दत्तवान्। मनुष्यस्य स्वीयमेधया आलोच्य सन्मार्गम् अनुसर्तुं भगवता दत्तां स्वेच्छां सुष्ठु विनियुज्य प्रवर्तितुं धर्माधर्मबोधकं वेदरूपं शास्त्रमपि भगवान् दत्तवान्।

वयं सर्वेऽपि सनातनधर्मसम्बद्धाः भवामः। धर्मः नाम भूतभविष्यद्वर्तमानकालानां सर्वेषां देशानां, सर्वेषां प्रान्तानां सम्बन्धी भवति। परन्तु आचाराः देशकालप्रान्त सम्बन्धिनः भवन्ति। अधर्मस्य अनाचरण मपि धर्मः भवति। वेदास्सामान्यजनानां लभ्यपथे न सन्ति। अतः ऋषयः स्मृतिषु देशकालानुगुण्येन वेद अविरुद्धान् आचारान् ग्रथितवन्तः। अस्यामेव सरण्यां भगवतः श्रीनिवासस्य सम्बन्धे अनेकान् आचारान् सम्प्रदायान् प्रवेश्य विशिष्टां कृषिं कृतवतां मध्ये श्री शङ्कर भगवत्पादाचार्याः श्रीमन्तः रामानुजाचार्याः अग्रगण्याः भवन्ति। वर्तमान काले समष्टि कुटुम्ब व्यवस्थायाः विच्छेदात् उदरपोषणार्थं बहूनां जनानां विदेशगमनात्, विदेशनिवासात्, पाश्चात्य नागरिकताप्रभावात् स्वीयमतविश्वासानां विच्छेदः भवति। ज्येष्ठैः उक्तान प्राचीनाचारांश्च मूढविश्वासत्वेन परिगणयन्तः जनाः अधिकाः भवन्ति। अतः युवकानां कृते, सामान्य जनानां कृते च कर्तव्योपदेशः स्वीयमतधार्मिकविषयेषु विश्वासस्थापनञ्च आवश्यकतया तिष्ठति।

अस्मिन् मार्गे सनातन धर्म व्याप्तौ तिरुमल तिरुपति देवस्थानीय धर्म प्रचार परिषद् बहूनि कार्याणि करोति। बहुषु ग्रामेषु भजन मन्दिराणि सा परिषद् निर्माति। सनातन धर्म रक्षणं लक्ष्यत्वेन स्वीकृत्य आलयेषु वेदपारायणं, पुराणप्रवचनं, हरिकथाः इत्यादिनां बहुविध धार्मिक कार्यक्रमाणाम् आयोजनेन सनातनधर्मरक्षणं करोति। अस्माभिरपि तेषु भागग्रहणं स्वीकरणीयम्। धर्माचरणे दीक्षा च स्वीकरणीया भवति।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*




तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# आगस्ट् २०२३

सम्पुटिः-१० सञ्चिका-०५

श्रीशोभकृत्संवत्सरस्य अधिकश्रावण शुक्लपौर्णिमा तः
श्रीशोभकृत्संवत्सरस्य निजश्रावण शुक्लपौर्णिमा पर्यन्तम्-१९४४





गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - श्रीवेङ्कटेश्वरस्वामिनः पवित्रोत्सवाः, तिरुमल।
अन्तिमरक्षापुटः - श्रीपद्मावतीदेव्याः आयोजमान वरलक्ष्मी व्रतम्, तिरुचानूरु।


सूचना
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-



# बालात्रिपुरसुन्दरी

- डा. सि.आदिलक्ष्मीः
चरवाणी - ९९४९८७२१४९

त्रिपुरसुन्दरी अथवा महात्रिपुरसुन्दरी दशमहाविद्यासु अन्यतमा। साक्षात् आदिपराशक्तिः। त्रिषु लोकेषु सुन्दरी इत्येवं हेतोः त्रिपुरसुन्दरीति कथयन्ति। षोडशवर्षवयस्का अतः षोडशीत्येवमपि कथयन्ति। माता श्रीचक्रोपरि वामपदं संस्थाप्य इक्षुदण्डेन निर्मितं चापं, पुष्पबाणं शिक्षादण्डञ्च धृत्वा आसीना भवति। 'त्रिपुर' शब्दस्य त्रयः लोकाः इत्यर्थः 'सुन्दरी' इति पदस्य मनोहरी इत्यर्थः।अतः त्रिपुरसुन्दरी इत्युक्ते 'त्रिलोकपरिपालनसुन्दरीत्यर्थः'। परन्तु 'त्रिपुर' शब्दस्य अर्थाः अनेके सन्ति। अस्याः देवतायाः त्रीणि रूपाणि विद्यन्ते इति तस्याः तन्नामागतम्। सृष्टिस्थितिलयकारिणी सा। अनेकशक्ति स्वरूपिणी। इच्छाशक्तौ 'वामदेवी' इति नाम्ना ब्रह्मदेवस्य पत्नीरूपेण पूजां स्वीकरोति। ज्ञानशक्तौ विष्णोः पत्न्या पूजां स्वीकरोति। क्रियाशक्तौ रौद्री सा शिवस्य पत्नीत्वेन वरं ददाति। अतः तस्याः 'ललिता' इत्येवमपि व्यवहारः वर्तते। 'ललिता' इति शब्दस्य 'क्रीडयति' इत्यर्थः। त्रिपुरस्य पत्नी इत्युक्ते शिवस्य भार्या गौरीदेवी इत्यपि अर्थः वर्तते। मनोबुद्ध्यहङ्काराः बालसुन्दर्यधीने भवन्ति। अभयहस्तमुद्रया शोभिता माता मानसिकव्यथां नाशयति। त्रिपुरसुन्दरीदेवी श्रीचक्रपुरत्रयाणां प्रथमदेवता भवति। षोडशविद्याधिष्ठानदेवता इयमेव। अतः उपासकाः त्रिपुरसुन्दर्याः अनुग्रहार्थं बालार्चनं कुर्वन्ति। 'बालात्रिपुरा' इति नामैव परमपवित्रं भवति। शिवः त्रिपुरान्तकः गौरी त्रिपुरसुन्दरी च। त्रिपुरसुन्दरी जाग्रत्स्वप्नसुषुप्तिकारिणी। अवस्थात्रयाणामधिष्ठानदेवता सा त्रिपुराणि पालयति। त्रयाणां पुराणां शरीरत्वेन संस्थाप्य समस्तप्रपञ्चम् अनुभवयोग्यं कुर्वती भक्तानां सन्तोषं जनयति।माता अवस्थारूपेणाऽस्माकं हृद्येवतिष्ठति। सा आत्मस्वरूपिणी अतः अस्याः पूजनेन ज्ञानप्राप्तिर्भवति। शिवस्वरूपेण माता चैतन्यं कृत्वा मोक्षमपि ददाति। वास्तवे बालात्रिपुरसुन्दर्याः शिवस्य पत्न्याः पार्वत्याः किञ्चित् रूपम् एव यस्याः उत्पत्तिः राक्षसानां नाशार्थम् अभवत्। अस्याः शुक्लशान्तस्वरूपमेव गौरी। एवमेव अस्याः भयङ्कररूपमेव काळी भवति।

शरन्नवरात्रि उत्सवेषु प्रथमदिने त्रिपुरसुन्दरीं बालायाः रूपे पूजयन्ति। 'बाला' इति पदस्य लघुबालिका इत्यर्थः। अतः अस्माकं गृहेषु विद्यमानाः लघुबालिकाः बालास्वरूपाः भवन्ति। शरन्नवरात्रिषु मातुः ध्यानेन अस्माकं सन्तानस्याभिवृद्धिः ऐश्वर्याभिवृद्धिश्च भवतः। निर्मलमनसः सङ्केताः बालाः। 'बालाः दैवस्वरूपाः' । समस्तप्राणिकोट्यां भगवत्याः दर्शनमेव बालार्चनलक्ष्यं भवति। अतएव मन्त्रोपासकानां प्रथमतः बालामन्त्रं प्रदास्यन्ति। दुर्गायाः भक्ताः मातुः अनुग्रहवरप्रसादाय नवरात्रिषु अष्टम्याम् अथवा नवम्यां कुमारीकन्यकाः पूजयन्ति। कुमारीकन्यकाः नवसंख्याकाः भवन्ति चेदत्युत्तमं भवति। नोचेत् २ कुमारीकन्यके पूजयितुं शक्यते। किन्तु भोजनार्थं कन्यकाः २ वर्षादारभ्य दशवर्षपर्यन्तमेव भवितव्यम्। २ वर्षीया कुमारी, ३ वर्षीया त्रिमूर्ति, चतुवर्षीया कल्याणी पञ्चवर्षिया रोहिणी, षड्वर्षीया कालिका, सप्तवर्षीया चण्डिका, अष्टवर्षीया शाम्भवी, नववर्षीया दुर्गा, दश वर्षीया कन्या सुभद्रासमानतया भावनीया इति दुर्गासप्तशतौ कथितमस्ति। क्रमशः कुमारीकन्यकानां नमस्कारमन्त्रः इत्थं दुर्गासप्तशत्यां वर्णितः -

१. कुमार्यै नमः २. त्रिमूर्त्यै नमः ३.कल्याण्यै नमः ४. रोहिण्यै नमः ५. कालिकायै नमः ६. चण्डिकायै नमः ७. शाम्भव्यै नमः ८.दुर्गायै नमः ९. सुभद्रायै नमः कुमारीकन्यकाना कुरूपता न भवेत्। पूजानन्तरं कुमारीकन्यकायै भोजनं प्रीत्या दातव्यम्। तां दक्षिणाताम्बूलेन प्रीतिं कृत्वाशीर्वादः स्वीकरणीयः। एवं पूजार्चनेन महामाया भगवती अत्यन्त प्रसन्ना भूत्वा मनोरथान् पूरयति। पूजानन्तरं भक्ताः एवम् अर्चयन्ति -

**ऐंकारासन गर्भितानलशिखां सौः क्लीं कलां बिभ्रतीम्। सौवर्णाम्बरधारिणीं वरसुधा धौतान्तरङ्गोज्ज्वलाम्। वन्दे पुस्तक पाशमङ्कुशधरां स्रग् भासुरोद्यत् कराम् तां बालां त्रिपुरां भजे त्रिनयनां षट्चक्रसञ्चारिणीम्।**

**पूजायाः फलम्** - भगवती बाला भक्त्या पूजितवतां भक्तानाम् अनुग्रहं करोति। सन्तानैश्वर्यदायिनी सा आयुशरोग्याभिवृद्धिं करोति। अन्तश्शत्रून् नाशयित्वा मोक्षं ददाति। 







# नारद विजयः

- एम्.कामेश्वरराव्
चरवाणी - ९९८९०१३०२०

अस्माकं आर्षवाङ्मये पुराणप्रपञ्चे महाभारते-रामायणादि महाकाव्येषु एवं सर्वत्र लोकसञ्चारिणः देवर्षेः महामहिमान्वितस्य ब्रह्ममानसपुत्रस्य कलहभोजनस्य श्रीमतः नारदस्य नाम प्रसिद्धमेव।

सामान्यतः सर्वे जनाः भक्ताः मुनयः एवं सर्वे सदा चिन्तयन्ति यत् नारदो नाम कलहकारकः कलहभोजनप्रियः लोकसञ्चारी सर्वदा केषांचन मध्ये, विवादान् सृजति, आनन्दमनुभवति इति एकः दुरभिप्रायः, सर्वेषु वर्तते। परन्तु तत् न सत्यम्। असौ देवर्षिः महान् पण्डितः ज्ञानी विष्णुभक्तः लोकोपकारकः च। तस्य नाम्नि एव तादृशः सुन्दरः अर्थः अस्ति यत् "नारं ददाति" इति नारदः -

अर्थात् ज्ञानप्रदायकः। चैतन्यस्वरूपः च परन्तु सर्वे नारदस्य प्रवर्तनं व्यवहारशैलीं च दृष्ट्वा अथवा श्रुत्वा। सः कलहप्रियः। सर्वदा कलहान् एव करोति, कारयति, तैः कलहैः आनन्दमनुभवति, अन्यान् बाधते इत्येव चिन्तयन्ति परन्तु यदि वयं सूक्ष्मपरिशीलनं कुर्मः चेत्। तर्हि अस्माभिः अवगन्तुं शक्यते यत् सः नारदः लोकोपकारी मोक्षदायकः सत्पथदर्शकः इति। एतादृश नारदस्य विषये अनेकानि उदाहरणानि, अनेकाः कथाः दृष्टान्ताः वैदिकप्रपञ्चे , पुराणादिषु दृश्यन्ते। तासु कथासु एकं उदाहरण रूप दृष्टान्तं इदानीं वयं पश्यामः।

एकदा नारदस्य मनसि एकः सन्देहः समुत्पन्नः यत् अस्मिन् लोके कः श्रेष्ठः? कः गरीयान्? इति। तर्हि स्वस्य सन्देहस्य निवारणं कथ प्राप्तव्यम्? कः मार्गः? का गतिः? इति एव आलोच्य अन्ततः महाविष्णोः समीपं गत्वा स्व सन्देहं तस्य पुरतः उक्तवान्। विष्णुः देवर्षेः नारदस्य सन्देहं श्रुत्वा विहस्य हे नारद! अयं लोक एव सर्वपेक्षया महान् इव भाति। परन्तु एतादृश लोकोऽपि समुद्रेण परिवेष्टितः तदनुसृत्य यदि वयं समुद्रः एव महान् श्रेष्ठः इति वदाम चेत् तर्हि अगस्त्यः अमुं समुद्रं वा समुद्रजलम् पीतवान् अतः समुद्रः महान् इति वक्तुं न शक्यते। अस्मिन् सन्दर्भे अगस्त्यः एव महान् भवितुमर्हति। तथैव वयं अगस्त्यः आकाशेन समः इत्यपि वक्तुं न शक्यते। कुत इति चेत् वियत् अपि महत्। आकाशस्य पुरतः अगस्त्यः अपि अति सूक्ष्मः। यदि वयं गगनमेव महत् इति वक्तुं प्रयत्नं कुर्मः चेत् तर्हि श्रीमन्नारायणः वामनावतारे तादृशं आकाशमपि स्व लघुपादेन आक्रमणं कृतवान्। अतः वियदपि महत् इति वक्तुं न शक्यते। यदि एवं वयम् गणनम् कुर्मः चेत् तर्हि नारायणः एव सर्वेषु महान् इति वक्तुमपि न शक्यः। कुत इति चेत् श्रीमहाविष्णुः सदा तव हृदये अङ्गुष्ठमात्ररूपेण संस्थितः विराजमानः च अस्ति। अन्ततः त्वम् एव सर्वेषु श्रेष्ठः उन्नतः च इति अस्माभिः निश्चयः करणीयः इति उक्त्वा श्रीमहाविष्णुः तूष्णीम् अतिष्ठत्।

महाविष्णोः वचांसि श्रुत्वा नारदः आश्चर्यचकितः स्तब्धः च बभूव।



(तदनन्तरम्)

भगवान् महाविष्णुः हिरण्याक्षस्य राक्षसस्य वधार्थं यज्ञवराहमूर्तिरूपेण प्रकटितः। राक्षसं हिरण्याक्षं मारयित्वा यज्ञवराहमूर्तिः साधूनां प्रार्थनां स्वीकृत्य पृथिव्यां स्थातुं निश्चितवान्। यज्ञवराहमूर्तिः स्वं प्रकटयितुं पृथिव्यां सुस्थानं निश्चितवान्। वैकुण्ठात् क्रीडापर्वतम् आनयेत् इति गरुडम् आज्ञापयत्। सूत मुनिः शौनकादीन् ऋषीन् अवदत् यत् यज्ञवराहमूर्तिः स्वामिपुष्करिणीं स्वस्य निवासरूपेण चिनोतीति। एतत् श्रुत्वा, सर्वे मनुयः स्वामिपुष्करिणी माहात्म्यं कथयितुं सूतऋषिं प्रार्थितवन्तः।

तेषां याचनाम् शृण्वन् सूतमुनिः अवदत् 'हे ऋषयः! स्वामिपुष्करिणी माहात्म्यं ज्ञातुं भवतः उत्साहः मया अवगतः। अहं भवतां वक्ष्यामि शृण्वेन्तु श्रीवैकुण्ठे क्रीडापर्वतः इति पर्वतः अस्ति। तत्र भगवान् श्रीमहाविष्णुः विश्रामं करोति। पर्वते श्रीपुष्करिणी अस्ति। स्वामिपुष्करिणी इत्यपि कथ्यते। एतत् अप्राकृतिकं जलरूपम्। एतत् एकं स्थानमस्ति यत्र मानवः प्राप्तुं न शक्नोति। अतः करुणासागरः श्वेतवराहमूर्तिः गरुडं स्वामिपुष्करिणीसहितं तं पर्वतं पृथिव्यां आनेतुं आज्ञापितवान्। गरुडः इम। पर्वतं पृथिव्याम् आनयत्। एवं स्वामिपुष्करिणी पृथिव्याम् आगता।

हे मनुयः! श्रीपुष्करीणी सामान्या नदी न। पुण्यप्रदा यथा विरजानदी सर्वपुण्यनदीनां जननी गङ्गा नदी इव एषा महत्त्वपूर्णा अस्ति। न केवलमेतत्, ये स्नानं कुर्वन्ति अस्मिन् नद्यां, तेषां श्रीपुष्करीणी सर्वान् वरान् पूरयति। श्रीपुष्कारिणी जलं पिबतां सर्ववरान् प्रयच्छति। स्त्रियः ये श्रीपुष्करिणीजलं पिबन्ति ताः मनोरथं प्राप्नुयुः। अस्मिन्नद्यां स्नानार्थं जातिभेदः नास्ति। अस्या पुण्यनद्याः स्नानं करिष्यन्ति, ते अनन्तं पुण्यं प्राप्नुयुः।

मानवजन्म ८४ लक्षजन्मसु पुण्यकर्म कृतवता लभ्यते। तिथिषु एकादशी सद्गुरुसेवा, श्रीपुष्करिणीस्नानं न सुलभं। न सुकरं श्रीपुष्करिणी स्नानं, निवासः च श्रीवेङ्कटाद्रिषु। वेङ्कटाचलस्य श्रीपुष्करिण्याः च माहात्म्यं वक्तुं न शक्यते। अतः मया भवद्भ्यः श्रीपुष्कारिण्याः माहात्म्यं संक्षेपेण कथितम्। श्रीपुष्करिण्याः वेङ्कटाचलस्य च माहात्म्यं वचनात् परम् अस्ति।

अस्मिन् सन्दर्भे अहं भवद्भ्यः लघुकथां वक्ष्यामि। एकदा तारकासुरः नाम राक्षसः वसति स्म। सः सम्पूर्णं ब्रह्माण्डं पीडयति स्म। देवराजः इन्द्रोऽपि तारकासुरं हन्तुं न शक्तवान्। भगवान् कुमारस्वामी तारकासुरं हतवान्। ततो तारकासुरपीडनात् सर्वे विमुक्ताः परन्तु, कुमारस्वामी तारकासुरस्य वधं कृत्वा ब्रह्महत्यापातकम् अवाप्तवान्। कुमारस्वामी पितरं परमशिवं प्रार्थितवान् पापात् मुक्तिमार्गं दर्शयतु इति।

(अनुवर्तिष्यते)

- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२






# अश्वस्य स्वामिनिष्ठा

मध्याह्नसमयः। सर्वत्र नीरवता। मार्गः अपि निर्मनुष्यः। तदा एव कोऽपि अश्वः मार्गे धावति। तस्य एकः पादः व्रणितः। सः कष्टेन वेदनां सहते। तथापि त्रिभिः पादैः यथाकथमपि सः धावति। तस्य पृष्ठे उपविष्टः अस्ति तस्य स्वामी। तस्य स्वामी शस्त्रप्रहारैः व्रणितः।

अविरतं धावनेन अश्वः अतीव श्रान्तः जायते। सः वेगेन धावितुम् असमर्थः भवति। अतः मन्दं धावितुं प्रारभते। परं नैव विरमति सः। "अधुना ग्रामः समीपे एव। तत्र स्वामिनं नयामि संरक्षामि च। परं मार्गे विस्तीर्णः जलप्रवाहः। अधुना किं करणीयम्?" इति चिन्तयति अश्वः। क्षीणः व्रणितः च अश्वः तम् उल्लङ्घयितुम् असमर्थः। किन्तु समयः अल्पः। कथमपि प्राणान् अविगणय्य सः जलप्रवाहम् उल्लङ्घयति। अपरतीरं गत्वा भूमौ पतति। तेन आघातेन स्वामी अपि भूमौ निपतति। किञ्चित्कालानन्तरं स्वामी संज्ञां लभते। सः अश्वस्य समीपे आगच्छति। स्नेहेन अश्वस्य शरीरं स्पृशति। भूमौ पतितः अश्वः अपि स्वामिनं पश्यति समाधानेन प्राणान् त्यजति च।

कः एषः नृपः? ज्ञायते वा? सः एव महाराणाप्रतापः। राजस्थानराज्यस्य मेवाडप्रदेशस्य नृपश्रेष्ठः। कः एषः स्वामिभक्तः अश्वः? एषः चेतकः नाम अश्वः। अश्वेषु आदर्शभूतः सः। तस्य स्मृत्यर्थं निर्मितं समाधिस्थलं मेवडप्रान्ते विराजते।

धन्यः स्वामी राणाप्रतापः धन्यः च स्वामिभक्तः अश्वः चेतकः।



तिरुमलतिरुपतिदेवस्थानानि

# श्रीनिवास चतुर्वेदहवनम्



यागः एकः अद्वितीयः भारतीय सनातन धर्मे अस्ति। अयं यागसंस्कारः भारतदेशे पूर्वकालात् एव क्रियते। तत्तदेवता प्रसादार्थम् अग्नौ आज्यादि हविषाम् आहुतिः क्रियते। एव यागोऽयं क्रतुः, हवनम् इत्यदि पदैः व्यह्रियते। अस्य यागस्य सम्बद्धाः बहवः नियमः परम्पराश्च भवन्ति। अस्माकं पूर्वजैः बहूनि प्रयोजनानि सहेतुकतया उद्धिश्य यागादयः क्रियमाणाः आसन् ।

अधुना अधिकजनाः अनेक समस्याभिः व्याकुलाः भवन्ति। मनः शान्तिं प्राप्तुं बहुषु स्थानेषु भ्रमन्ति च परन्तु स्वास्यजीवनस्य कृते स्वस्थ, आहारः, योगः शारीरिक क्रियाकलापाः तेषां जीवन शैली इत्यादयः बहवः अंशाः अतीव सहायकाः भवन्ति। यज्ञेषु क्रियमाणः मन्त्रजपः अग्नौ हविरादि सर्म्पणं देशस्य शान्तिं विश्व शान्तिं च प्रददति।

तिरुपतौ विश्वकल्याणाय ति.ति.दे. 29.06.2023 तः 05.07.2023 पर्यन्तं प्रशानिक भवनस्य प्राङ्गणे वैदिकमन्त्रेः महता वैभवेन श्रीनिवास चतुर्वेदहवनं सम्पन्नम्। अयं यागः ति.ति.दे.श्री वेङ्कटेश्वर उन्नत वेदाध्यन संस्था धर्म प्रचार परिषादा च सहयोगेन आयोजिताः। अस्य कार्यक्रमे ३२ ऋत्विक् पण्डिताः चतुर्वेदानां मन्त्रैः कलशस्थापना, कलश आवाहनं यजमानेः सङ्कल्पं, तस्य पूजा भक्तानां सङ्कल्पं, अग्निप्रतिष्ठा कार्यक्रमाः च चतुर्वेद मन्त्रैः हवनं कृतवन्तः।

अस्मिन् हवने सृष्टौ विद्यमान सकल जीवाः स्वस्थाः, सुखिनः च भवेयुः इति भगवन्तं उद्दिश्य प्रार्थनां मन्त्रैः विहिता भवति। वेदान्तुसारं क्रियमाणेन एतादृशानि फलानि लभयन्ते।

भगवता मनुष्याणां कृते अनुगृहीतानां वेदानां मन्त्रैः यागनिर्वहणेन मनुष्याणां धर्ममार्ग प्रवृतिः भवति। भगवता अनुगृहीताः वेदाः ऋषीणां तपश्शक्त्या दिव्यश्रवण गोचराः अभूवन्। अनन्तरं गुरुशिष्य परम्परया लोके व्याप्ताश्च अभूवन्।

लिङ्गपुराणे, वराहपुराणे च लोकहिताय एतादृशाः यज्ञाः कर्तव्याः इति उल्लेखः अस्ति। एतादृशानि हवनानि प्रजानां स्वस्ति श्रद्धांमेधां कीर्तिं श्रियम् आयुः यशः ददति इति वेदोक्तिः।

अस्यां सरण्याम् एतादृशा प्रयोजनानि अभिसन्धाय ति.ति.देवस्थानैः अनुष्ठिताः अनुष्ठास्यन्ते च श्रीनिवास चतुर्वेद हवनं तस्मिन् आयोजितम् आसीत्। अस्य यज्ञस्य कृते सर्वतः आगताः सर्वे भक्ताः स्वामिनः कृपां प्राप्तवन्तः।

**लोका समस्ताः सुकिनो भवन्तु।**
**श्री श्रीनिवासार्पण मस्तु।**



# तिरुमलतिरुपतिदेवस्थानानि

तिरुमल तिरुपति देवस्थानं, तिरुपति परिपालना भवन प्राङ्गण मैदाने आयोजित श्रीनिवास चतुर्वेद हवन कार्यक्रम सन्दर्भे तिरुमल तिरुपति देवस्थानं हिन्दू धर्म प्रचार परिषत् द्वारा प्रदर्शित धार्मिक कार्यक्रमेषु ति.ति.दे. अधिकारिणः, उद्योगिनः, असंख्याक भक्तजानाः च भागं गृहीतवन्तः।













तिरुमल तिरुपति देवस्थानं, तिरुपति परिपालना भवन प्राङ्गण मैदाने 29-06-2023 तः 05-07-2023 पर्यन्तम् आयोजित श्रीनिवास चतुर्वेद हवन कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.इ.एस्., दम्पती, ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी (विद्य&वैद्यम्) श्रीमती सदाभार्गवी ऐ.ए.एस्., वेदपण्डिताः, अर्चकाः, भक्ताः च भागं गृहीतवन्तः।













# तिरुमलतिरुपतिदेवस्थानानि




तिरुमल श्री स्वामिनं 22-06-2023 दिनाङ्के दर्शित राष्ट्र अत्युन्नत न्यायस्थान न्यायमूर्तिः श्री वि.सुब्रमणियन् दम्पती श्री स्वामिनः चित्रेण, प्रसादेण च सत्कृत ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि।




नवी मुम्बयि मध्ये ति.ति.दे. श्री वेङ्कटेश्वर स्वामिनः मन्दिरस्य नवनिर्माणार्थं 07-06-2023 दिनाङ्के भूमिपूजा जातं अस्मिन् महाराष्ट्र मुख्यमन्त्री श्री एकनाथ शम्बाजी शिण्डे, उपमुख्यमन्त्री श्री देवेन्द्र फडनवीस्, रेमण्ड ग्रूप् सी.एम्.डि श्री गौतमेरसिंघानिया, ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे., कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.इ.एस्., इत्यदयः भागं गृहीतवन्तः।




मार्ग प्रमाद निवारणार्थं ति.ति.दे. महाशान्ति होमं तिरुमल प्रथम घाट्मार्गे सप्त मैल् समीपे स्थित श्रीप्रसन्नाञ्जनेय स्वामिनः विग्रह समीपे 14-06-2023 आयोजितः। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.इ.एस्., भागं गृहीतवन्त।




श्री वेङ्कटेश्वर वैद्यविज्ञान संस्था (स्विम्स्) तिरुपति नूतन निर्देशरूपेण ३०-०६-२०२३ दिनाङ्के पदवीम् अलङ्कृत ति.ति.दे संयुक्त कार्यनिर्वहणाधिकारी (विद्या&वैद्याम्) श्रीमतीसदा भार्गवी ऐ.ए.एस्.,।




- डा।।एम्.जि.नन्दनरावः, चरवाणी - ८५००५६३०७४

''तपसा विन्दते महत्'' इति वेदवाणीमनुसृत्य जगतः सृष्टेः कारणीभूतं परमात्मानम् बहवः अन्विषन्ति। निरन्तरप्रयत्नः तपः इति शब्देन कथ्यते। मनसः इन्द्रियाणां च निग्रहः तपस्सु श्रेष्ठं तपः। शान्ताः दान्ताः महान्तः दुर्निग्रहं मनः निग्रहीतुम् विविधान् उपायान् आश्रयन्ति। कठिनपरिश्रमेण लक्ष्यं शीघ्रं सिध्यति। अतः तपस्विनः विविधान् कठोरनियमान् पालयन्तः गुरूपदिष्टमार्गे साधनां कुर्वन्ति।

पूर्वम् साधकाः अरण्यमाश्रित्य विविक्तस्थाने स्थित्वा तपः आचरन्ति स्म। श्रीरामस्य वनवाससन्दर्भे दण्डकारण्यवासिनः तपस्विनः श्रीरामं शरभङ्गाश्रमे मिलन्ति। राक्षसानां क्रौर्यस्य कारणतः ऋषिमण्डलानि ध्वस्तानि। बहवः तपस्विनः मारिताः, बहवः राक्षसैः भक्षिताः। श्रीरामतत्त्वं जानन्तः एते मुनयः श्रीरामम् आश्रित्य राक्षसपीडानिवृत्यर्थं प्रार्थितवन्तः। अस्मिन् समये आश्रमवासिनः एव न अपि च अन्येऽपि विविधव्रतधारिणः तापसाः समागताः। अस्मिन् सन्दर्भे महर्षिणा वाल्मीकिना तपस्विनां प्रकाराः अत्र अरण्यकाण्डे दर्शिताः। उपवासनियमतः आरभ्य निराहारपर्यन्तं विविधस्तरेषु एते साधकाः तपसि स्थिताः। तेषां सर्वेषामपि तपसः लक्ष्यं परमात्मदर्शनम्। ते सर्वे श्रीरामदर्शनेन कृतार्थाः अभवन्। धर्मरक्षणतत्परः श्रीरामः राक्षसान् निवार्य दण्डकारण्यं निष्कण्टकम् अकरोत्।

**श्रीरामसन्दर्शनार्थं समागताः ऋषिसंघाः**
**वैखानसा वालखिल्या संप्रक्षालामरीचिपाः।**
**आश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः॥३.६.३.॥**
**दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे।**
**गात्रशय्या अशय्याश्च तथैवानवकाशिकाः॥३.६.४.**
**मुनयः सलिलाहाराः वायुभक्षास्तथापरे।**
**आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः॥ ३.१.५.**
**तथोर्ध्ववासिनो दान्ताः तथाऽऽर्द्रपटवाससः।**
**सजपाश्च तपोनिष्ठाः तथा पञ्चतपोन्विताः॥ ३.६.५.**
**सर्वे ब्रह्म्या श्रिया युक्ताः दृढयोगसमाहिताः।**
**शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः॥ ३.६.७.**

पूर्वोक्तप्रकारकाः तपस्विनः अरण्यवासव्रते स्थितं श्रीरामं शरभङ्गाश्रमे अमिलन्। तेषां तपो निरतानां नामानि तेषां प्रधाननियमं द्योतयन्ति। इन्द्रियनिग्रहादयः गुणाः सर्वेषु विद्यन्ते। तेषां व्रतनियमानां नाम्नाम् आधारेण तेषां प्रधाननियमः कः इति विचारयामः।

**वैखानसाः** - सृष्टिकर्तुः प्रजापतेः नखेभ्यः एते उत्पन्नाः इति वेदवचनं विद्यते। "ये नखास्ते वैखानसाः" इति। एते आदिकालतः भगवतः उपासनायां निरताः। एते भागवतोत्तमाः।

**वालखिल्याः** - "ये वालाः ते वालखिल्याः" इति वेदवचनमनुसृत्य एते प्रजापतेः रेमेभ्यः समुत्पन्नाः।

**संप्रक्षालाः** - परमात्मनः पादप्रक्षालनात् जाताः संप्रक्षालाः इति नाम्ना कथ्यन्ते। बलिनिग्रहणाय यदा महाविष्णुः त्रिविक्रमरूपं धत्ते तदा त्रिविक्रमस्य आकाशे प्रसारितः पादः ब्रह्मलोकम् अतिक्रम्य व्याप्तः भवति स्म। तदा ब्रह्मलोकपर्यन्तं प्रसारितं त्रिविक्रमस्य पादं ब्रह्मा महत्या भक्त्या प्राक्षालयत् कमण्डलुजलेन। तदा तपोनिष्ठाः भगवदाराधकाः केचन भगवत्पादोदकबिन्दुभिः समुद्भूताः।

**मरीचिपाः** - सूर्यकिरणैरेव शक्तिं प्राप्यतेः तपः आचरन्ति। केचन चन्द्रकिरणेभ्योऽपि शक्तिं संपाद्य निराहाराः भूत्वा तपः आचरन्ति। एतादृशाः विशिष्टशक्तिमन्तः मरीचिपाः इति कथ्यन्ते।

**अश्मकुट्टाः** - शिलाघर्षणेन वितुषितेभ्यः धान्येभ्यः एते जीवन्ति। अपक्वधान्यकणानेव भक्षयित्वा एते तपः आचरन्ति।

**पर्णाशनाः/ पत्राहाराः** - वृक्षस्य शुष्कपत्राणि खादन्तः केचन तपः आचरन्ति। केचन हरितपत्राणि भक्षयित्वा जीवन्ति। ते पत्राहाराः इति कथ्यन्ते।

**दन्तोलुखलिनः** - दन्तैरेव व्रीह्यादिधान्यानां तुषनिर्मोकं कृत्वा खादन्ति। दन्ताः एव ऐतेषाम् उलूखलम्।

**उन्मज्जकाः** - कण्ठदघ्ने जले स्थित्वा ये तपः आचरन्ति ते उन्मज्जकाः।

**गात्रशय्याः** - आस्तरणम् आच्छादनञ्च विना शयनम् एतेषां नियमः। केचन उपविश्य एव निद्रान्ति।

**अशय्याः** - एते निद्रामेव न कुर्वन्ति। निद्राहीनाः तपस्विनः अशय्याः इति कथ्यन्ते।

**अनवकाशिकाः** - एकेन पादेन स्थित्वा तपः आचरन्ति।

**सलिलाहाराः** - जलमात्रं पिबन्तः तपः आचरन्ति। जलमात्राहारवन्तः एते फलादिकमपि न भक्षयन्ति।

**वायुभक्षाः** - एते तपस्विनः वायुभक्षका भूत्वा जलमपि न पिबन्तः तपोनिरताः भवन्ति।

**आकाशनिलयाः** - अनावृत्तप्रदेशे एते निवसन्ति। वृक्षच्छायायां, गुहासु वा एते न निवसन्ति।

**स्थण्डिलशायिनः** - अनाच्छादितभूमौ एते निद्रान्ति।

**ऊर्ध्ववासिनः** - पर्वताग्रेषु एतेषां वासः। उन्नतप्रदेशेषु स्थित्वा तपः आचरन्ति।

**आर्द्रपटवाससः** - सर्वदा आर्द्रवस्त्रमेव धरन्ति।

**सजपाः** - निरन्तरं जपपराः।

**तपोनिष्ठाः** - सर्वदा वेदमन्त्रोच्चारणनिरताः

**पञ्चाग्नयः** - ग्रीष्मेऽपि महति आतपे स्थित्वा तपः आचरन्ति। परितः अग्निचतुष्टयं संस्थाप्य आतपे ये तपः आचरन्ति ते पञ्चाग्नयः इति कथिताः।

एवं बहुविधप्रयासैः यन्निमित्तं तपः आचरन्ति स्म, श्रीरामदर्शनेन तेषां तपः सफलम् अभवत्।



श्रीमते रामानुजाय नमः

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

(तदनन्तरम्)

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु
चरवाणी - ९९८५२३७३५३

**शेषाद्रिविहारी कलभकः -**

श्लो. ६. उद्यानेषु फलावनम्र विविधक्षोणीरुहोद्भासिषु
भ्राम्यत्सारस मण्डितासु विकसत्पद्मासु वापीष्वपि।
प्रेयस्या प्रणयानुवृत्तिपरया क्रीडारसं निर्विशन्
शेषाद्रौ धृतकौतुकः कलभकः कुर्यात् प्रमोदं मयि।।

**ता-** श्रीवेङ्कटाचले एको नवयौवनो गजकिशोरः समधिकफलभारेण अवनतशाखैः नानाविधपादपैः मण्डितेषु उद्यानवनेषु कदाचित् तथा चञ्चल तरङ्गोपरि विलसत् जलविहङ्गेषु फुल्लकमलपुष्पासु दीर्घिकासु कदाचित् च स्वस्मिन् प्रेम्णा स्वम् अनुवर्तमानया गजकान्तया सह स्वेच्छया भृशं विहरति। स चासौ कलभक स्साक्षात् श्रीवेङ्कटाचलपतिरेव रमया सहितो विहरतीति भावः। आनन्दमय स्स भगवान् मम विषये आनन्दम् अनुगृह्णातु।।

**सु.सौ.व्याख्या -** श्रीवैकुण्ठनिर्विशेषे वेङ्कटाचले श्रृङ्गाररसाधिदैवतस्य श्रियासमेतस्य वेङ्कटनाथस्य सोत्साहो विहारोऽभिवर्ण्यतेऽस्मिन् श्लोके -

**उद्यानेषु .... वापीष्वपि -** शेषाचलोद्यानेषु हस्तापचेयफलप्रकरैः अत्यन्तम् अवनताभिश्शाखाभिः, भुवं स्पृशन्त इव विविधा वृक्षा विलसन्ति। तथैव तत्र वाप्यः किञ्चित् चञ्चलानां तरङ्गाणाम् उपरि प्लवद्भिः सारसपक्षिभिः, एवं विकसितैः अरविन्दैश्च संशोभिता भवन्ति। एवं तत्रोद्यानानि वाप्यश्च प्राकृतिकं सौन्दर्य मावहन् विहारेच्छूनाम् उत्सुकताम् आपादयन्ति। तथा वैकुण्ठवासिनो जगत्पतेरपि विहारकौतुकोद्दीपनानि भवन्तीति भावः।

**प्रणयानुवृत्तिपरया-** प्रणयेन प्रेम्णा अनुवृत्तौ अनुगमने परा आसक्ता प्रणयानुवृत्तिपरा - तया प्रेयस्या विशेषणमेतत्। अत्र कलभकशब्दस्य श्रीनिवासपरतया, प्रेयसीशब्देन तस्य



कान्ता श्रीदेवी विवक्षिता भवति। सा च तस्मिन्नतिशयितप्रीत्या तमनुरक्ता सर्वदा तमेवानुसरति। नित्यानपायिनी हि लक्ष्मीः सर्वेष्वप्यवतारेषु देवदेवं जगन्नाथ मनुसरन्ती स्वयमपि तदनुगुणेन दिव्यरूपेण अवतरति इति पराशरमहर्षिवचनम् इह अनुस्मरणीयम् -

**एवं यदा जगत्स्वामी देवदेवो जनार्दनः।**
**अवतारं करोत्येषा तदा श्रीस्तत्सहायिनी -**

- श्रीविष्णु - १.९.२६.

चक्रपाणेः आदित्यत्वे पद्मारूपेण परशुरामत्वे धरणीरूपेण, राघवत्वे सीतारूपेण, कृष्णत्वे रुक्मिणीरूपेण च अवतारं करोति कमला। अन्येषु च अवतारेषु अनपायिनी तम् अनुवर्तत एव -

**देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी।**
**विष्णो र्देहानुरूपां वै करोत्येषाऽऽत्मन स्तनुम्।।**

- श्रीविष्णु - १.९.२९

**प्रेयस्या -** प्रीणाति इति प्रिया। अतिशयेन प्रिया प्रेयसी, प्रियशब्दात् अतिशयार्थे ईयसुन् प्रत्यये स्त्रीलिङ्गे ङीप्। वेङ्कटेशप्रभोः परां प्रीतिमावहन्ती इत्यर्थः। ''विष्णोः परां प्रेयसीम् - श्रीवेङ्कटेशप्रपत्ति - १. इति अभियुक्तोक्तिः अत्र मननीया। अमुमेवार्थम् अभिष्टौति वेङ्कटाचलमाहात्म्यम् - ''श्रीनिवासाङ्ग मध्यस्था सुतरां केशवप्रिया - वराह .७. प्रेयसीशब्दात् सहार्थे तृतीया। तथा सहित इति भावः।।

**क्रीडारसं निर्विशन् -** क्रीडायाः विहारसम्बन्धिनं रसम् आनन्दं निर्विशन् अनुभवन्नित्यर्थः। निर् पूर्वको विशधातुः भोगार्थकः।

**धृतकौतुकः -** कुतकमेव कौतुकम्। कुतुकशब्दात् स्वार्थे ''प्रज्ञादिभ्यश्च'' अष्टा ५.४.३८ इति सूत्रेण अण् प्रत्ययः। धृतं कौतुकं कुतूहलं येन स धृतकौतुकः।'' कौतूहलं कौतुकं च कुतुकं च कुतूहलम् अमर - १.७.३१. शेषाचलस्थितेषु उद्यानेषु वापीषु च प्रेयस्या सह विहरणे कृताभिलाष इत्यर्थः।

**कलभकः -** कलेन करेण भाति इति कलभः। अथवा ''कल'' गतौ इति धातो ''कृशृशलि'' - इत्यादिना उणादि सूत्रेण अभच् प्रत्यये कलभः। कलभ एव कलभकः। **कलभकोऽत्र मत्तहस्ती।**

यद्यप्यत्र ''कलभः करिशाबकः अमर २.८.३५ इत्यादि बहुकोशबलेन बालगज इत्येवार्थो वक्तव्यः। तथापि अत्र कलभकस्य उद्यानादिषु प्रेयस्या सह रमणोत्सुकत्ववर्णनात् ''त्रिंशद्वर्षस्तु कलभ'' इति वैजयन्तीनिघण्टु - ३.७.६६. (यादवप्रकाशपण्डितीयः) प्रामण्येन च त्रिंशद्वर्षवयस्कः स्वयं विहरणशीलो युवगज इत्येवार्थः स्वीकर्तुं समञ्जसः।

एव मेवात्र ''मदेन भाति कलभः' - चन्दा.दीपक.इति आलङ्कारिक वचनमपि अनुसन्धेयं सहृदयैः। अत्र महीपतिशब्देन महाराज एव वर्ण्यतया उपात्तः, न तु युवराजादिमात्रम्। तस्य च प्रतापशीलत्वं परिपूर्णतया वक्तु मुचितः, न तु किञ्चिन्न्यूनतया, तत्र भानस्य विहितत्वात्। तथैवात्र अप्रस्तुततया कलभ उपादीयत, स च समदः। उभयत्रापि भानस्य तुल्यत्वात् तद्धेत्वो रपि तुल्यता नाम पूर्णता वक्तव्या। गजस्य मदोत्कटत्वं च यौवनवयोनिबन्धनम्। अतोऽत्र कलभशब्देन परिपूर्णयौवन दशापन्नो गज एव बोधयितुमुचितः। ततश्च प्रकृतग्रन्थे कलभक शब्देन गजयुवा इत्येवार्थो बोद्धव्य इति सिद्धम्।।

किञ्चात्र कलभकः श्रीनिवास एव। शेषाद्रीश स्तुतिरूप प्रकरणबलात् प्रमोद प्रापण प्रार्थनाच्च एव शेषाद्रीशो गजरूपेण अतिशयोक्त्या अध्यवसितो रूप्यते।

अवसरेऽस्मिन् दिव्यसूरि सूक्ति रियं स्मरणीयताम् आपतति-

**पेरुगु मदवेळम् मापिडिक्कु मुन्निनु**
**इरुकण् इळमूङ्गिल् वाङ्गि, अरुगिरुन्द**
**तेन्कलन्दु नीट्टुम् तिरुवेङगडम् कण्डीर्**
**वान् कलन्द वण्णन् वरै - इरण्डाम् तिरु. ७५.पा.**

गगनस्पर्शिसमुन्नतशिखरे वेङ्कटाचले परिपुष्ट एको मदगजः पर्वद्वयवन्तं मृदुलं वंशनाळम् उत्पाट्यं, तं पुष्परसे समास्पृश्य प्रेम्णा करिण्यै प्रददाति, तां प्रीणयति च। भक्तवराः। तादृश मनोहर दृश्यविषयं वेङ्कटाचलक्षेत्रं सेवध्वम्।

अत्रवर्णितौ हस्तिदम्पती साक्षात् लक्ष्मीनारायणावेवेति अभियुक्तानाम् अभिप्रायः।

तथा च तादृशौ अन्योन्यानपायिनौ शेषाचलोद्यानादि विहाररसिकौ दिव्य गजमिथुनरूपिणौ श्री श्रीनिवासौ मम विषये प्रमोदं वितन्वाताम् - इति तात्पर्यम्।

वृत्तं शार्दूलविक्रीडितम् - तल्लक्षणं च सूर्याश्वैर्मसजस्तताः सगुरव श्शार्दूल विक्रीडितम् - इति।

(अनुवर्तिष्यते)

चित्रकथा



# बकासुरस्य वधा

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

लाक्षा गृहं दग्धम्। पाण्डवाः अक्षताः निर्गताः। एकचक्रपुरं गुप्तं प्राप्तवन्तः। एकदा ब्राह्मण कुलं तेषां शरणं गतम्। तदा कुन्ती तान् पृष्टवती।

किमर्थं रुदन्ति?



मातः! अद्य अस्माकं वारः अस्ति....



पूर्वनिर्णय प्रकारेण बकासुरस्य एकं शकटमितं अन्नं, मेषौ, एकः मानुषः आहारार्थं प्रेषणीयानि अम्बा ....



यदि भवन्तः न प्रेषयन्ति तर्हि....



आम्! स राक्षसः ग्रामस्य उपरि पतित्वा सर्वान् हन्ति।



तथावा....।

तदर्थं प्रतिदिनं गृहात् एकं मानुषं तस्य आहारार्थं प्रेषयामः।



कुन्ती तान् सान्त्वयति स्म....

त्वं दुःखी न असि! अहं युष्माकं स्थाने मम पुत्रं प्रेषयामि।

मास्तु, मास्तु



अहं भवतः कुते मम पञ्च पुत्रेषु एकं प्रेषयामि।

मास्तु मास्तु



कुन्ती तं अङ्गीकारयति। शेष व्यवस्था ते एव कृतवन्तः। बकासुरस्य गुहां प्रति भीमसेनः गतवान्







भीमबकासुरयोः घोरं युद्धं प्रचलितम्







अन्तिमे भीम प्रहारेण बकासुरः मृतः। मृतदेहेन सह भीमः ग्रामं प्रति आगतवान्।



जनाः सर्वे भीमसेनम् अभिनन्दितवन्तः।




सर्वे जनाः सुखिनो भवन्तु

स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा ल वि नो दि नी

## रसप्रश्नाः

१. परीक्षित् महाराजस्य शापं कः दत्तवान्?

२. कुम्भकर्णस्य पुत्रः कः?

३. सुषेणस्य पुत्री का?

४.पुंसवन व्रताचरणं का कृतवती?

५.परशुरामस्य रथसारथेः नाम किम्?

६.आदिशङ्कराचार्यः कुत्र शिवानन्दलहारी अरचयत्?

(समाधानानि - १. शमीक पुत्रः २. निकुम्भः ३. तारा ४. दिति ५. सुमहः ६. श्रीशैलै )

(१.चामरं नास्ति २. पवित्रवस्त्रं नास्ति ३. एका स्त्री न दृश्यते ४.रङ्गवल्ली नास्ति ५. दीपः नास्ति ६.कमलम् नास्ति ७.मेघः नास्ति।)



# लघुप्रश्नोत्तरी





तिरुमलतिरुपतिदेवस्थानानि

१३

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. श्रीरामचन्द्रस्य वंशस्य नाम किम्?
२. महाविष्णोः द्वारपालकौ कौ?
३. ओं कार स्मरणं करोतु इति कस्मिन् वेदे अस्ति?
४. श्रीकृष्ण कर्णामृत रचयिता कः?
५. कुन्तीदेव्याः कः मन्त्रोपदेशं कृतवान्?
६. अदित्यहृदयं कः, कस्य उपदेशं चकार? अगस्त्यः
७. श्रीमहाविष्णुः अनन्तपद्मनाभस्वामि रूपेण कुत्र अस्ति?
८.विष्णुपुराणमनुसृत्य कहोळः विष्णुसहस्रनामस्तोत्रे कस्य मन्त्रस्य उपासनेन अष्टावक्रं पुत्र रूपेण प्राप्तः?
९. गोकर्णस्य कथा कुत्र दृश्यते?
१०. श्रीरामरक्षा स्तोत्रं क रचितवान्?
११. तीव्रांशुः नाम कः?
१२. दुर्योधन मरणानन्तरं कौरवसैन्याधिपतिः कः आसीत्?
१३. रुद्रकवच प्रणेता कः?
१४. गोकर्णस्य सहोदरः कः?
१५. चतुश्श्लोकी भागवतं कः उपदिदेश?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयन DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०८.२०२३ अस्ति।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



# तिरुमल
# श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवाः
## २०२३ सेप्टम्बर् १८ तः २६ पर्यन्तम्

18-09-2023
इन्दुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

19-09-2023
भौमवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

20-09-2023
सौमवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

21-09-2023
बृहस्पतिवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

22-09-2023
भृगुवासरः
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

23-09-2023
मन्दवासरः
प्रातः - हनुमद्वाहनम्
रात्रौ - गजवाहनम्

24-09-2023
भानुवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

25-09-2023
इन्दुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

26-09-2023
भौमवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



# तिरुमल
# श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवाः
## २०२३ अक्टोबर् १५ तः २३ पर्यन्तम्



15-10-2023
भानुवासरः
प्रातः - स्वर्ण तिरुच्चि उत्सवः
रात्रौ - महाशेषवाहनम्

16-10-2023
इन्दुवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

17-10-2023
भौमवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

18-10-2023
सौम्यवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

19-10-2023
बृहस्पतिवासरः
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

20-10-2023
भृगुवासरः
प्रातः - हनुमद्वाहनम्
रात्रौ - गजवाहनम्

21-10-2023
मन्दवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

22-10-2023
भानुवासरः
प्रातः - स्वर्ण रथोत्सवः
रात्रौ - अश्ववाहनम्

23-10-2023
इन्दुवासरः
प्रातः - चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवः



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-07-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

# तिरुचानूरु श्रीपद्मावती देव्याः
## अयोजमान वरलक्ष्मी व्रतम्
25-08-2023